सद्यो शब्दार्थस्तनभरनता शङ्करवधू-
र्भवेद्भूत्यैभूयाद्भवजनितदुःखौघशमनी ॥ ८९ ॥

इति श्रीशारदातिलके पञ्चविंशः पटलः ॥ २५ ॥ * ॥

समाप्तः ॥

---

नि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत् पुरुषकाणि चेत्यति भगवत् पतञ्जलिवचनादितिशिवम् ॥ ८९ ॥

पुरं गोदावर्या विलसदुपकण्ठे जनततं जनस्थानं नाम प्रथितमभवद्दक्षिणदिशि ।
महाराष्ट्रे देशे जनकतनयालक्ष्मणवृतः पुरारामोयस्मिन्नवसदतितुष्टेन मनसा ॥ १ ॥

तस्मिन्पुरे ब्राह्मणसत्तमानां कुले विशुद्धे महति प्रसिद्धे ।
श्रीभट्टरामेश्वर इत्युदारो गुणैरभूद्वादिमहेभसिंहः ॥ २ ॥

तस्मादभूत्तीक्ष्णकुशाग्रबुद्धिः श्रीभट्टपृथ्वीधरनामधेयः ।
अनेकधाध्यापयदेषभाट्टवेदान्तशास्त्रं फणिभाषितानि ॥ ३ ॥

गीर्वाणाचार्यवर्य्योदिविकृतवशतियंद्भयादेव शङ्के ।
शेषः पातालमूलं स च सपदि पराभूतिभीत्या विवेश ।
अन्येषां कैव वार्त्ता कृतकृतकवचश्चापलानां कृतं तैः ।
सम्यक् शक्योऽस्य वक्तुं नहि वदनशतैरप्यशेषः प्रभावः ॥ ४ ॥

कैश्चिद्दिनैरतिपवित्रचरित्र एष वाराणसीमभिगमच्छिवराजधानीम् ।
तत्रैव वासमकरोत्तदनुप्रतीकः कायावसानमवधिं परिचिन्त्य धीरः ॥ ५ ॥

तस्माद्राघवभट्ट एष समभूद्वेदान्तसन्न्यायवित् ।
ख्यातोभट्टनये समस्तगणिते साहित्यरत्नाकरः ।
आयुर्वेदनिधिः कलासु कुशलः कामार्थशास्त्रे गुरुः ।
संगीते निपुणः सदागमनिधिः पारं प्रयातः परम् ॥ ६ ॥

श्रीदुर्गे ! गणनायक ! महगुरो ! गोविन्द ! गौरीपते ! ।
युष्मानर्थय आनतेन शिरसा सोऽहं प्रबद्धाञ्जलिः ।
मन्त्रार्चादिविवेचने यदि भवेद्बालिश्यमत्र क्षमा-
त्काचित्कं मम भक्तिभावितहृदोदासस्य तत् क्षम्यताम् ॥ ७ ॥

अत्युष्णं तीक्ष्णधीभिर्जगदुपकृतये राघवो यद्विवव्रे
गूढार्थं मन्त्रशास्त्रं निधिमिव परमं, संप्रदायाञ्जनेन ।
सन्तः सन्तोषमस्मिन्वितरत तरसा स्वादितस्वस्वकामा
दुष्टादोष्टं स्वकीयं जहि हिताधिया नान्यथार्थागमोवः ॥ ८ ॥

पिशुनजनोऽन्तर्मलिनः परगुणसन्तापविमुखमतिः ।
तत्र मनो न विषीदति दूषणमात्रात्तु यत्र विरतोऽयम् ॥ ९ ॥

कायस्था इव वाचकाः कतिचन प्रायेण मूका इव
श्रोतारस्त्वपरे शुका इव परे साधप्रलापाः पुनः ।
ग्रन्थग्रन्थिविवेचनैकचतुरा ये कोविदाः केवलम् ।
द्वित्रास्ते तदुदारितावगतये विज्ञा पुनः पञ्चषाः ॥ १० ॥

आकाशपुष्करक्ष्मा ( १५५० ) परिमिते रौद्राभिधे वत्सरे ।
पौषे मासि सिते दले रवितिथौ पक्षे च सिद्धान्विते ।
तन्त्रे ऽस्मिन् सुधिया व्यधायि रुचिरा श्रीराघवेण स्फुटा ।
टीका सद्गुरुसंप्रदायविमला विश्वेशपुर्यामियम् ॥ ११ ॥

इति श्रीशारदातिलकटीकायां राघवभट्टविरचितायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां पञ्चविंशः पटलः ॥ २५ ॥ * ॥ श्रीरस्तु शुभमस्तु ॥

# श्लोकानुक्रमणिका

व

ष



स

